विषयाश्रुतिः यथानद्यइति स्यंदमानाः स्रवंत्यो गच्छंत्यः समुद्रं प्राप्यास्तमदर्शनं प्राप्नुवंति तथाब्रह्मज्ञो विदेहकैवल्यकाले परा द्ब्रह्मादेः परं बिंबभूतं परमेश्वरं प्राप्नोतीत्यर्थः यस्मिन्निति प्रलयस्वापादिकाले जीवसहितं विश्वं लिंगदेहादिकं विलयं यदपि प्राप्नुवदपि प्राप्नातिसंस्काररूपेण सूक्ष्मतयातिष्ठति यदिति इणगतावितिधातोः शतृप्रत्यये शपोलुकिशतृप्रत्ययस्यङित्वाद्गुणाभावे इयङापवादभूते इणोयणितियणिकृतेरूपं गत्यर्थकानां प्राप्त्यर्थत्वस्य प्रसिद्धेः संस्कारावशेषलये हेतुः उद्यदिति सृष्टिकाले जागरणकालेचोत्पन्नं भवदित्यर्थः निरवशेषलये पुनरुत्पन्नं नस्यादितिभावः गुरूपदेशेन ब्रह्माभिन्नकूटस्थात्मसाक्षात्कारे सति अत्यंतमनंतं निरवशेषं लयं निरुपाधितादात्म्यं समुद्रमध्ये नदीवत्प्रव्रजतियस्मिन् तं विश्वाधिष्ठानं विश्वलयाधिष्ठानं मुक्तजीवप्राप्यं चमध्ये चित्तं चित्तस्यमध्ये भाव ये मुक्तजीवैक्य स्थानत्वोक्त्या मुक्तप्राप्यत्वेन निरुपाधिब्रह्मत्वं नृसिंहस्यव्यंजितं त्रिभुवनस्य गुरुंजनकं हितोपदेष्टारं चेतितदभजने गुरुद्रोहः कृतघ्नताच व्यज्यते नृसिंहं नृषुसिंबंधं हंतितं इति भवबंधच्छेदकत्वोक्त्यातदभजने मोक्षाभावो व्यज्यते मध्ये चित्तमितिपारे मध्येषष्ठ्यावेत्यव्ययीभावसमासः निपातनात्पूर्वपदे एकारः अव्यालुक् समास इतिवादिनोऽभ्रांताः नचपारेमध्यइतिसूत्रेणसप्तम्या अलुगेवनिपात्यत इतिवाच्यं गगायामध्यादागतइत्यर्थे मध्येगंगमागत इति प्रयोगानापत्तेरितिदिक् १८ ३१ ७

नृषुतवमाययाभ्रममभीष्ववगत्यभृशंत्वयिसुधियो भवेदधति भावमनुप्रभवम् कथमनुवर्ततां भवभयंतवयद्भ्रुकुटिः सृजतिमुहुस्त्रिणेमिर भवच्छरणेषुभयम् ३२ ७ ७

नन्वेवं तावत्परमेश्वराज्जीवाजायंते तद्वशेनचकर्माणिकुर्वंति पुनस्तत्रलीयंत इति संसारचक्रे परिभ्रमणमुक्तम् इदानींतन्निवृत्तये परीत्यभूतानिपरीत्यलोकान् परीत्यसर्वाः प्रदिशोदिशश्च उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेशेत्याद्याभगवदनुवृत्तिं विदधतीत्याह नृषुतवमाययेति नृषुजीवेषु अमीषु तवमायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वासुधियः भृशंत्वयि अभवे भवनिवर्तके भावं स्वभावमनुवृत्तिं दधति कुर्वंति कीदृशं भ्रमं अनुप्रभवम् अन्वनुप्रभवोयस्मिन् तं भ्रमम् ततः किमत आह कथमिति अनुवर्ततामनुवर्तमानानां त्वामेवशरणं भजतां भवभयं संसारभयम् कथं भवेत् नकथंचिदपीत्यर्थः कुतः यद्यस्मात्तवभृकुटिः भ्रूभंगरूपस्त्रिणेमिः तिस्रोनेमय इवावच्छेदाः शीतोष्णवर्षाकालायस्य संवत्सरात्मकस्य कालस्यसः अभवच्छरणेषु न भवान् शरणं रक्षितायेषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति अतएवंभूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति ३२ संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तं कथंचिदापन्नमिह प्रपन्नं त्वमुद्धरश्रीनृहरे नृलोकम् १९ ७ ७ ७ नृषुतव परीत्येति भूतानिपरीत्य सर्वभूतेष्वात्मा एक एवेति ज्ञात्वा लोकान् स्वर्गादीन् कर्मचितत्वेनानित्यान् ज्ञात्वा सर्वादिशः प्रदिशश्च ऐहिकविषयानप्यनित्यान् ज्ञात्वा प्रथमजां

त्रयीलक्षणांवाचमुपस्थाय संसेव्यात्मना मनसान्तरतस्य परमेश्वरस्यात्मानंस्वरूपं अभिसंविवेश आश्रितवान्कश्चनमुमुक्षुरित्यर्थः संसारेति आपन्न विपत्तिग्रस्तं कथंचित् आर्ततयाजिज्ञासुतयासकामतया दंभादिनावात्वांप्रपन्नंशरणागतमुद्धरेति १९ ३२ ७
तद्विज्ञानार्थमिति सनिर्विण्णोब्राह्मणो नित्यात्मतत्वसाक्षात्कारार्थं गुरुमेवाभिगच्छेत् नतुनिपुणोपिस्वयंवेदांतं विचारयेत् समित्पाणिः सन्निति रिक्तपाणिर्नपश्येदिति शास्त्रादुपायनपाणिरित्यर्थः धनफलपुष्पाद्यलाभेआकाष्ठमप्युपायनंग्राह्यमितिव्यंजनायस मित्पदं श्रोत्रियंवेदशास्त्राध्ययनसंपन्नंगुरुमितिगुरोः शिष्यसंशयच्छेदे सामर्थ्यंब्रह्मनिष्ठं ब्रह्मसाक्षात्कारशालीनमितिबोधसंचारसामर्थ्यं
सत्वंभगवतिभावोमनोनियमेस्तिभवतिसोऽपि गुरूपसद्नादिति गुरूपसदनंविदधति तद्विज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियंब्रह्मनिष्ठं आचार्यवान्पुरुषोवेद नैषातर्केणमतिरापनेयाप्रोक्ताऽन्येनैव सुज्ञानायप्रेष्ठेत्याद्याः श्रुतयइत्याह विजितहृषीकवायुभिरिति विजितानिहृषीकाणींद्रियाणिवायुश्चप्राणोयैस्तैरपि अदांतमनस्तुरगंअदांतमदमितंमनएवतुरगः दुर्दमत्वसा

विजितहृषीकवायुभिरदांतमनस्तुरगंयइहयतंतियंतुमतिलोलमुपायखिदः व्यसनशतान्विताः समवहाय गुरोश्चरणंवणिजइवाजसंत्यकृतकर्णधराजलधौ ३३ ७

म्यात् तंयेयंतुंनियंतुंयतंतिप्रयतंते अतिलोलमतिचंचलम् गुरोश्चरणंसमवहाय अनाश्रित्यतेउपायेषुखिद्यंतेक्लिश्यंतीत्युपायखिदः संतोव्यसनशतान्विताबहुव्यसनाकुलाइहसंसारसमुद्रेसंतितिष्ठंतिदुःखमेवप्राप्नुवंतीत्यर्थः हेअजअकृतकर्णधराअस्वीकृतनाविकावणिजोयथातद्वत् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौतुस्वतएवमनोनिश्चलंभवतिनान्यथेतिभावः ३३ यदापरानंदगुरोभवत्पदेपदंमनोमेभगवल्लभेत तदानिरस्ताखिलसाधनश्रमः श्रयेयसौख्यंभवतः कृपातः २०
आचार्यवान्उक्तविधः प्रशस्तोगुरुर्यस्यसएवपुरुषोब्रह्मवेद नैषेति वेदांतशास्त्रजन्यामतिस्तर्केणस्वमत्यूहमात्रेणअपनेयाबाधाहीनयद्वातर्केणप्राप्तव्यानेत्यर्थः किंतुअन्येननिपुणेनाचार्येणप्रोक्ताप्रबोधितासतीसुज्ञानायसाक्षात्कारायभवति प्रेष्ठहेप्रियतमेति नाचिकेतसंमतियमसंबोधनं २० ३३ ७ ७ ७ ७ ७

परीक्ष्येति लोकान्भूरादीन्भोग्यान्परीक्ष्य विचारेणानित्यतया निश्चित्य निर्वेदं वैराग्यं प्राप्नुयात् अकृतो नित्यो मोक्षः कृतेन कर्मणा नेति
यदा यस्मिन्काले सर्वे कामा विषयाः ये अस्य विदुषो हृदि बुद्धौ वासनारूपेण प्रविष्टास्ते प्रमुच्यंते नश्यंति अथ तदैव मर्त्यः अमृतो मुक्तो भवति अत्र

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तथा यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः अथ मर्त्यो
मृतो भवत्यत्र ब्रह्म समश्नुत इत्याद्या वैराग्यमंगं विदधतीत्याह स्वजनसुतेति आत्मा देहः धाम गृहम् असवः प्राणः स्वजनादि
भिः किं सर्वरसे सर्वे रसाः सुखानि विद्यंते यस्मिन्नूतस्मिन् त्वयि परमानंदे एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंती
ति श्रुतेः श्रयतः त्वां सेवमानस्य पुंसः आत्मनि सति नृणां तुच्छै रेतैः किं क उपयोगः इति सत् सत्यं परमार्थसुखमजानतामत एव मि

स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे इति स
दजानतां मिथुनतो रतये चरतां सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ३४

थुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् कर्मणि षष्ठ्यौ अजानतः चरतः पुरुषान् को नु अर्थः सु
खयति आनंदयति न कोपीत्यर्थः इह संसारे कथंभूते स्वविहते स्वत एव नश्वरे स्वनिरस्तभगे स्वत एव गतसारे पाठांतरे
तु कोन्वित्यस्यैतद्विशेषणद्वयम् अतस्त्वद्भजनमेवोचितमित्यर्थः ३४ भजतो हि भवान्साक्षात्परमानंदचिद्घनः आ
त्मैव किमतः कृत्यं तुच्छदारसुतादिभिः २१ ७ ७ ७ ७

अस्मिन्नेव जन्मनि ब्रह्म प्राप्नोति ब्रह्मैव भवतीत्यर्थः एतस्यैवेति ब्रह्मलोकस्थानंदाच्छतगुणोत्कृष्टतयोक्तस्य परमानंदस्य ब्रह्मरूपस्य मात्रा लेश
मन्यानि भूतानि ब्रह्मादिस्थावरांतान्युपजीवंतीत्यर्थः पाठांतरे इति कोन्विह स्वविहतः स्वनिरस्तभग इति प्रथमांतपाठे २१ ३४ ७

भुवीति ऋषयोवेदार्थतत्वंजानंतइत्यर्थः तीर्थानिगंगादिनीसदनानिचवृंदावनादीनीतिद्वंद्वः अथवेति पक्षेपुरुपुण्यानिचतानितीर्थानिगुरवस्तेषांसदनानीतिकर्मधारयपूर्वपदगर्भस्तत्पुरुषः येभवत्पदांबुजहृद इत्यादिलक्षणायेनसकृत्त्वयिमनोदधतिनेचतेपिवेत्यन्वयः



एवंगुरूपदेशेनतत्वमवगम्यसारासारविवेकेनचसर्वतोनिर्विद्यतदेवमहत्संगेनोपपत्तिभिः सम्यगवधारयितुंतीर्थसदनानि सुनयः पर्यटंतीतिश्रोतव्योमंतव्यइत्यादिश्रुत्यर्थमाह भुविपुरुपुण्यतीर्थसदनानीति तेउक्तलक्षणाः ऋषयोविमदाः निरहंकाराःयतोभवत्पदांबुजहृदः भवतः पदांबुजंहृदियेषांते अतःस्वयमेवअघभिदंघ्रिजलंयेषांतेउतअपि तथाविधाअपि पुरूणिबहूनिपुण्यानितीर्थानिसदनानिचक्षेत्राणितान्येवोपासतेसेवंतेप्रायस्तत्रैवमहत्संगोभवति इतिअथवापुरुअधिकंभग वद्भजनलक्षणंपुण्यंयेषांतानिचतानितीर्थानिचगुरवःमहांतइत्यर्थः तेषांसदनानिआश्रमान् यथाहामरसिंहः निपानागम

भुविपुरुपुण्यतीर्थसदनान्यृषयोविमदास्तउतभवत्पदांबुजहृदोऽघभिदंघ्रिजलाः दधतिसकृ न्मनस्त्वयियआत्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथान् ३५ ७

योस्तीर्थमृषिजुष्टेजलेगुराविति नपुनःपुरुषसारहरावसथान् उपासते पुरुषाणांसारंविवेकस्थैर्यधैर्यक्षांतिप्रमुखं हरंतीति तथा तेचते आवसथागृहास्तान् नचतेषांगृहादिभवकुत्सितसुखापेक्षेत्याह दधतिसकृन्मनस्त्वयियआत्म निनित्यसुखइति सकृदपित्वयियेमनोदधतितेपिगृहाद्यासक्तानभवंतिकिंपुनरेवंभूता इत्यर्थः ३५ मुंचन्नंगतदं गसंगमनिशंत्वामेवसंचिंतयन् संतःसंतियतोयतोगतमदास्तानाश्रमानावसन् नित्यंतन्मुखपंकजाद्विगलित त्वत्पुण्यगाथामृतस्रोतःसंप्लवसंप्लुतोनरहरेनस्यामहंदेहभृत् २२ ७ ७ ७

मुंचन्नंगेति अंगभोनरहरेयद्वा अंगंशरीरंतदंगानिचसुतदारगृहधनादीनितेषुसंगमासक्तिंमुंचन्नित्यर्थः २२ ३५ ७

सतइदं श्रीमद्भागवतं यैर्यत्प्रसादात्संप्रकाशितं  तान् श्रीधरान् श्रीनृसिंहमपि वंदे जगद्गुरुं १ अत्र सतइदमुत्थितं सदिति चेदिति पूर्वपक्षः
किं पूर्वमीमांसकानामाहोस्वित् सांख्यादीनामिति संदेहे संदिग्धे तु वाक्यशेषादिति न्यायेन श्लोकोपसंहारे उरुवृत्तिभिरुक्थजडान् इति मीमांसकोपादानात्
उपक्रमउक्तः सतइदमुत्थितमित्यादि पूर्वपक्षोपि मीमांसकानामेवेति निश्चित्यावतारयति नन्विति मीमांसकाहि कर्मणएव परमपुरुषार्थहेतुत्वं निश्चित्य
सर्वस्य वेदस्य क्रियापरत्वं वर्णयंति कर्मणश्च परमपुरुषार्थहेतुत्वं तदैव निर्वहेत् यदा कर्मफलभूतस्य स्वर्गादिजगतः सत्यत्वादिकं स्यादिति जगतः स
त्यत्वं प्रवाहनित्यत्वादिकं च वर्णयंति नहि भोक्तृभोग्यात्मकद्वैतस्य मिथ्यात्वेन त्फलकस्य कर्मणः परमपुरुषार्थहेतुत्वं वेदस्य सर्वस्य असत्यफलकक्रि
यापरत्वं वा युज्यत इति जगत्सत्यत्ववर्णनं मीमांसकानामेवावश्यकं सांख्यकाणादादीनां तु ज्ञानस्याभोक्त्रात्मरूपेणावस्थानात्मकमोक्षहेतुत्वं
वदतां किं जगत्सत्यत्वग्रहणेनेति मीमांसकानामेवायं पूर्वपक्षः तत्राम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते इत्येतावत्पूर्वप

नन्वाम्नायस्य क्रियार्थत्वादानार्थक्यमतदर्थानां तद्भूतानां क्रियार्थेन समन्वय इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुप
निषदामपि तदेव युक्तम् यथोक्तम् तंत्रवार्तिककृता एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यानमिति न एकमेवा
द्वितीयं ब्रह्म विज्ञानमानंदं ब्रह्म अचक्षुरश्रोत्रमित्येवं तद्विपरीतात्मप्रतिपादनात् नह्यद्वितीयपरमानंदरूपस्य कर्मांगत्वं युज्यते
अननुमतं चैतद्वार्तिककृतः कथम् सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते परांगं चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति तेनैवो
क्तत्वात् एतदर्थमेव मननाय मुनयः पर्यटंतीत्युक्तम् तत्र तावत् द्वैतस्य सत्यत्वे प्रवेदप्येवं तदेव तु न संभवतीति प्रश्नोत्तराभ्यां प्र
तनेन तत्त्वावधारणप्रकारमाह सतइदमुत्थितं सदिति चेदिति इदं विश्वं धर्मि सदिति साध्यो धर्मः सतउत्पन्नत्वात् हेतुः यद्यतउत्प
न्नं तत्तदात्मकमेव दृष्टम् यथा कनकादुत्पन्नं कुंडलादि तदात्मकं तद्वदिति

क्षसूत्रं अस्यार्थः आम्नायस्य वेदस्य यज्ञादिक्रियाप्रतिपादनपरत्वात् तदर्थानां अक्रियार्थानां सोरोदीत् प्रजापतिरात्मनो वपामुदक्खिदत् वायुर्वैक्षेपिष्ठा
देवतेत्यादीनां वाक्यानामानर्थक्यं निरर्थकत्वं तस्मादनित्यमनियतं वेदस्य प्रामाण्यमुच्यत इति एवं प्राप्ते सिद्धांतसूत्रं विधिनात्वेकवाक्यत्वादिति अ
थप्रथमपादस्थ तद्भूताधिकरणस्थ सूत्रं तद्भूतानां क्रियार्थेन समन्वय इति तत्तु नेषु भूतानां सिद्धार्थप्रतिपादकानां वाक्यानां क्रियार्थेन क्रियाप्रतिपा
दकेन वाक्येन रजतं न देयं पशुना यजेत् श्वेतमालभेतेत्यादिना सहान्वयः तथा च विधिप्रत्ययरहितवाक्यानां विधिवाक्यैः सन्निहितैर्दूरस्थैर्वा सह
विधिवाक्याकांक्षितनिंदात्वप्राशस्त्याद्यर्थपूरणेनान्वये कृते सर्वस्य वेदस्य क्रियापरत्वसिद्ध्या निरर्थकत्वनिरासेन प्रामाण्यं सिद्धं अध्ययनविधिप
रिगृहीते सर्वस्मिन्वेदे कस्याधि वाक्यस्यानर्थक्यासंभवात् निरर्थकाध्ययनविध्यनुपपत्तेरित्यर्थः उपनिषदामपि तत्त्वमसीत्यादिवाक्यानामपि

तदेवविधिवाक्यान्वितत्वमेवयुक्तं एतेनेति क्रियारहितवाक्यानांक्रियान्वयाकांक्षावतांक्रियापरवाक्यापेक्षितार्थबोधनेननिराकांक्षत्वमितिन्याये नोपनिषदांतत्वमस्यादिवाक्यानामपिकृत्वर्थोयज्ञांगभूतोयःकर्त्तायजमानस्तस्यप्रतिपादनमीश्वराभेदेनस्तुत्यानिरूपणंतेननैराकांक्ष्यंक्रिया न्वयेनक्रियाकांक्षारहितत्वंव्याख्यातंस्पष्टीकृतंवेदितव्यमित्यर्थः आदित्योयूपइत्यादिवाक्यैःसूर्यत्वादिनायूपादिस्तूयतेसचपशुनियोजनादिना क्रियास्वन्वेति एवमीश्वराभेदबोधकैरुपनिषद्वाक्यैर्यजमानःस्तूयतेसचकर्तृत्वेनक्रियास्वन्वेतीतिभावः श्लोकाद्वहिरेवसिद्धांतमाह नेति नह्यद्विती येतिस्तुतिर्हिशीघ्रप्रवृत्त्यर्थं अद्वितीयत्वबोधेतुस्वर्गादिभोग्यभोक्त्रादिद्वैतस्यकरणकर्मसंप्रदानादिकारकद्वैतस्यचबाधान्नप्रवृत्तिः एवंपरमानंद रूपत्वबोधेक्षुद्रस्वर्गानंदाद्यर्थंनप्रवृत्तिः तथाचक्षुरादींद्रियरहितत्वबोधेंधबधिरादितुल्यत्वापत्त्याकर्तृत्वभोक्तृत्वासंभवान्नप्रवृत्तिः सिद्धे- दितिभावः सर्वत्रैवहिविज्ञानमिति सर्वत्रवेदेविज्ञानंतत्तद्वेदवाक्यजन्यंद्रव्यदेवताकर्मादिविषयंज्ञानंसंस्कारत्वेनज्ञायतेसंस्काररूपंभवति अतएवव्रीह्यादिषुप्रोक्षणावघातादिसंस्कारवत्परस्ययागादेरंगंचगम्यते एवंहिकर्ममीमांसकसिद्धांतः स्वाध्यायोध्येतव्यइतिविहितस्यवेदा

तत्रयदिसदभेदः साध्यतेतदापादानत्वनिर्देशेनैवभेदप्रतीतेर्विरुद्धोहेतुरित्याह ननुतर्कहतमिति ननुनाभेदंसाधयामः किंतुतदु त्पन्नत्वेनकुंडलादिवद्भेदंप्रतिषेधयामः तत्रअभेदएवस्यादित्याशंक्यानेकांतिकत्वेनदूषयति व्यभिचरतिकचेति पितृपुत्रादि षुमुद्गरघटप्रध्वंसादिषुचतथादर्शनादितिभावः ननुतदुत्पन्नत्वंनामतदुपादानत्वंनतुतन्निमित्तत्वमतोनानैकांतिकत्वमित्या- शंक्यदूषयति कचमृषेतिगुणोपादानस्यापिफणिनोनगुणत्वंकिंतुमिथ्यात्वम् अन्यथाकुंडलादिवदबाधप्रसंगात् अतःपुनरपिअ ध्ययनस्यवेदार्थज्ञानंफलंनतुस्वर्गादि दृष्टेफलेसंभवत्यदृष्टकल्पनायाअन्याय्यत्वात् अवघातादेरिवतुषविमोकादि तच्चद्रव्यदेवतादिविष यकंवेदाध्ययनेनसंपाद्यंज्ञानंपौरुषवाक्यादिनापिस्यादितिपुनरध्ययनवैफल्येप्राप्तेवेदाध्ययनेनैवदेवतादिज्ञानंसंपाद्यमितिनियमः स्वीकार्यः नखदलनादिनापिवैतुष्येसिद्धेऽवहन्यादेवेतिनियमवत् तथाचयथावघातेनवैतुष्येकृतेतंडुलेषुकश्चनसंस्कारोभवतिनसनखदलनादिना तथावेदाध्ययनेनद्रव्यदेवतादिविषयकज्ञानेसंपादितेद्रव्यदेवतादिषुतादृशज्ञानजन्यःकश्चनसंस्कारउत्पद्यते तत्संस्कृतदेवतादिस्मर णादिनास्वर्गाद्यपूर्वसिद्धिर्नतुपौरुषवाक्यादिजन्यज्ञानेन एवंयागकालेपठ्यमानमंत्राणामपिदेवताकर्मादिविषयंज्ञानमेवदृष्टफलं नत्वदृ ष्टमपूर्वं अत्रापिपूर्ववत् स्मृत्यादिनाज्ञानसिद्धौनियमविधिनासंस्काररूपत्वकल्पनंपूर्ववत् एवंचसर्वत्रवेदेजायमानंज्ञानंसंस्काररूपंसि द्धंसंस्कारस्यचस्वतःफलवत्त्वाभावात् फलवतोयागस्यांगत्वमितिपरांगत्वंचसिद्धं आत्मविज्ञानादन्यत्रेति उपनिषज्जन्यात्मविज्ञानंविनाउप निषज्जन्यात्मज्ञानंसंस्काररूपंयज्ञादिकर्मांगंचनेत्यर्थः उपनिषज्जन्यात्मज्ञानस्यकर्मांगत्वाभावात्कर्मकर्त्र्यायजमानेनोपनिषद्विचा

रोनकार्यइतिभावः नचोपनिषदज्ञानस्यकर्मांगत्वेस्वर्गातिरिक्तमोक्षानंगीकारात् सर्वशाखागतोपनिषद्भागवैयर्थ्यमितिवाच्यं देहात्मभ्रांति
मतांजन्मांतरभोग्यस्वर्गादिफलककर्मसुप्रवृत्त्यभावेप्राप्तेतद्भ्रांतिनिरासार्थमुपनिषदावश्यकत्वात् देहाद्यात्मभ्रांतिरहितंयजमानविशेषं
प्रतिउपनिषद्वैयर्थ्यमिष्टमेव अतएवोपनिषदज्ञानंनांगं अंगंहिनियतंनतुपाक्षिकं यथावघातादि औपनिषदात्मज्ञानंतुभ्रांतिमत्पुरुषंप्रत्येवो
पयुक्तं नसर्वंप्रतीतिपाक्षिकमितिनतस्यकर्मांगत्वमितिवार्तिकाशयः एवंतदुक्त्वैवात्मज्ञानस्यसंस्कारत्वांगत्वाभावेसिद्धेक्रियापरत्वमप्युपनि
षदांमास्तुफलवदज्ञातार्थकत्वेनस्वार्थपरत्वोपपत्तेरितिसिद्धांत्याशयः यत्तुकेचनमीमांसकाःपत्न्यवेक्षितमाज्यंभवतीतियथोपांशुयागेउपयोस्य
माणाज्यस्यपत्नीकर्तृकचाक्षुषज्ञानंसंस्कारएवंयागंकरिष्यतःपुंसोहंब्रह्मास्मीत्यौपनिषदवाक्यानुसारेणावेक्षणंसंस्कारइतिसंकल्पयंति एतत्तुशारीर
कभाष्येएवानारभ्याधीतस्यात्मज्ञानस्ययज्ञकर्तृसंस्कारतयांगत्वंनयुज्यतइत्यादिनाविस्तरेणदूषितंततएवद्रष्टव्यं पूर्वश्लोकेनसंगत्यर्थमाह ए
तदर्थमेवेति नक्रियापरत्वेनैवसर्वस्यवाक्यस्यप्रामाण्यंकिंतुफलवदज्ञाताबाधितार्थपरत्वेनैव कूपसंमुखंगच्छन्नयमंधःकूपेपतेदितिवाक्या
नांविधिनिषेधरहितानामपिप्रामाण्यदर्शनादित्यादिनिश्चयस्यबहुमननंविनादुर्घटत्वादितिभावः एवंश्लोकाद्बहिरेवमीमांसकपूर्वपक्षंनिरस्य
मननप्रकारांतरेणश्लोकाक्षरैरपिनिरसितुमाह तत्रतावदिति द्वैतस्यभोक्तृत्वभोग्यरूपस्यकर्तृक्रियाकारकरूपस्यचसत्यत्वेअबाध्यत्वेएवस्वर्गा
दिफलकस्यकर्मणः परमपुरुषार्थहेतुत्वेनसर्ववेदस्यक्रियापरत्वंभवेदपि द्वैतस्यसत्यत्वमेवतुनसंभवतीतिप्रकारांतरेणनिवृत्तिपरत्वरूपवेद
तत्त्वनिश्चयायप्रश्नोत्तराभ्यांमननंदर्शयतीत्यर्थः इदंपदोक्तंविश्वंधर्मिपक्षः सदितिसाध्यं सतउत्थितमिति हेतुगर्भितंविशेषणमितिसतउ
त्पन्नत्वादितिहेतुःफलति ननुमीमांसकमतेआकाशादेःस्वर्गादेश्चोत्पत्त्यभावादुत्पत्तिमतामपिकेषांचिद्भोग्यजातानांब्रह्मणउत्पत्त्यनंगी
काराच्चकथमिदमनुमानंमीमांसकानामुभयवादिसिद्धहेत्वभावादितिचेन्न कचित्परवादिमात्रसिद्धस्यार्थस्यहेतुकरणदर्शनाद्वेदांतिमत
सिद्धमेवसतउत्पन्नत्वंहेतूकृत्यैतत्पूर्वपक्षोत्थानात् अत्रसिद्धांतीकिंविश्वंसदित्यनेनविश्वंसदभिन्नंसतउत्पन्नत्वादितिसदभेदःसाध्यते
किंवाविश्वंसद्भिन्नंनेतिसप्रतियोगिकभेदाभावः साध्यतेइतिविकल्पंमनसिनिधायप्रथमपक्षेदूषणमाह तत्रयदिसदभेदइति ननुअभे
दोभेदाभावश्चैकएवनभेदअभेदइतिनञोभावार्थकत्वादितिचेन्न असुराधर्मादिपदेष्विवनञोविरोधार्थकत्वात् सुरविरोधीअसुरोधर्मवि
रोधीचाधर्मोभावरूपीतिवद्भेदविरोधीअभेदःकश्चनस्वरूपसंबंधविशेषस्तत्साधनेनचसर्वथास्वरूपैक्यसिद्धिरित्यभ्युपगमात् विरोधश्चभेदा
भेदयोस्तेजस्तिमिरयोरिवसहानवस्थानलक्षणइतिसतउत्पन्नत्वादित्यपादानकारकनिर्देशेनजगतिसप्रतियोगिकभेदप्रतीतौतत्राभेदप्र
तीतिर्नजायतइतिविरुद्धोहेतुः नहिवेदांतिमतेभावरूपस्यापितमसस्तेजःप्रतीत्यधिकरणेप्रतीतिर्भवतीत्याशयेनाह विरुद्धोहेतुरिति नर्केह

तमिति भेदप्रत्यायकेन हेतुना अभेदप्रत्यायनं युक्तिबाधितमित्यर्थः द्वितीयपक्षमनुवदति ननुनाभेदमिति तत्राभेद एवेति सद्भेदनिषेधे जगतिसत्यत्वमेवसिद्ध्येदित्यर्थः नचात्रपक्षेऽपादाननिर्देशेनजाताभेदप्रतीतिर्भेदनिषेधस्यविरोधिनीतिशंक्यं यथाकनकादुत्पन्नं कुंडलमित्यत्रापादानत्वेनकार्यत्वेनचजाताभेदप्रतीतिः कनककुंडलयोः सुवर्णत्वेन भेदनिषेधसाधनेविरुद्धा नभवतितथासतउत्पन्नत्वादित्यनेनकार्यत्वेनकारणत्वेनचजाताभेदप्रतीतिः सत्यत्वेनरूपेणसत्कारणजगत्कार्ययोर्भेदनिषेधसाधनेविरुद्धानेत्याशयात् अभेदसाधनेच सर्वथैक्यसिद्धौकार्यत्वकारणत्वरूपभेदोपि विरुद्ध इतितत्रविरुद्धोहेतुरिति युक्तमुक्तमितिदिक् अनैकांतिकत्वेनेति सव्यभिचारोनैकांतिकइतिपंचविधहेत्वाभासांतर्गतप्रथमहेत्वाभासत्वेनदूषयतीत्यर्थः सद्धेतुनाहिसाध्यसिद्धिर्नत्वसद्धेत्वाख्यहेत्वाभासेन सद्धेतुत्वंचसव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितेतिपंचविधहेत्वाभासभिन्नत्वं व्यभिचरतिश्चकेति हेतुसत्वेसाध्यासत्वंव्यभिचारः यथापर्वतोवह्निमान्द्रव्यत्वादित्यत्रद्रव्यत्वंजलादौतत्रसाध्यस्यवह्नेरभावाद्व्यभिचारः तथाविश्वंसद्भिन्नंनसतउत्पन्नत्वात् यत्यतउत्पन्नंनत्ततोभिन्नंनयथाकनकादुत्पन्नंकुंडलंकनकान्नभिन्नमितिसामान्यमुख्यव्याप्तौपितुरुत्पन्ने पुत्रेदंडप्रहारादुत्पन्नेघटादिप्रध्वंसेचततउत्पन्नत्वरूपहेतुसत्वेपिभेदाभावरूपसाध्यासत्वाद्व्यभिचारः क्षत्रियादेर्देवदत्ताद्ब्राह्मण्यादौजातेयज्ञदत्तेक्षत्रियत्वसूतत्वादिनादेवदत्तत्वयज्ञदत्तत्वादिनाचभेदात् मुद्गरघटध्वंसादेर्भावत्वादिनाभेदात् नन्वत्रापिमनुष्यत्वादिनाभिधेयत्वादिनाचभेदोनेतिचेत् जगतिमिथ्यात्वसत्वेपिभासमानत्वादिनाभेदनिषेधसंभवान्नसत्यत्वसिद्धिः भासमानत्वंहिस्फुरतीत्यादिप्रतीत्यास्पदत्वरूपंघटादिजगतिब्रह्मणिचास्तीतिगूढाशयः ननुविश्वंसतोभिन्नंसदुपादानकत्वात् यद्यदुपादानकंतत्ततोनभिन्नमिति विवक्षणेपुत्रेपितुः प्रध्वंसेमुद्गरस्यचनिमित्तत्वेनोपादानत्वाभावात्तदुपादानकत्वहेतोरसत्वान्नव्यभिचारइतिशंकते नन्विति गुणोपादानस्येति रज्ज्वारोपितत्वेनरज्जूपादानकेसर्पेव्यभिचारः रज्जोर्व्यावहारिकसत्यत्वात्सर्पस्यमिथ्यात्वेनतद्भेदादित्यर्थः अन्यथासर्पस्यव्यावहारिकसत्यत्वेबाधोनस्यात् ननुसदुपादानत्वपदेनसन्मात्रोपादानकत्वंविवक्ष्यते तथाचयन्मात्रोपादानकंयत्तत्ततोनभिन्नमितिव्याप्तेर्नरज्जुसर्पेव्यभिचारः रज्जुसर्पस्याज्ञानयुक्तरज्जूपादानकत्वेनरज्जुमात्रोपादानकत्वाभावान्मिथ्यात्वंयुक्तमितिशंकते ननुनतत्रेति तुल्यमत्रापीति अविद्यायुक्तसद्ब्रह्मणउपादानत्वात्सन्मात्रोपादानत्वंहेतुर्जगतिस्वरूपासिद्धइतिजगतोमिथ्यात्वमेवयुक्तमित्यर्थः नतयोभयस्त्विति उभाभ्यांसदविद्याभ्यांकारणाभ्यांयुक्तमिदंजगत् अतःसन्मात्रोपादानकत्वहेतोरसिद्धेरपितथानसत्यंनेत्यर्थः ननुसदेवसोम्येदमग्रआसीदितिसन्मात्रोपादानत्वश्रुतेर्मास्त्वविद्येतिशंकायामाह अयमर्थइति अविद्यायुक्तस्यैवेति देवात्मशक्तिंस्वगुणैर्निगूढामित्यविद्यायुक्तत्वश्रवणादविद्यानंगीकारेविवर्त्तवादासंभवेनब्रह्मणोपिविकारित्वसंभवाच्चेतिभावः अर्थे

क्रियाकारित्वादिति अर्थः प्रयोजनमुदकाहरणादि तस्य क्रियानिर्वाहः तथा च विश्वं सत् तत्तत्प्रयोजननिर्वाहकारित्वात् यत्सत्यं न तत्प्रयोज
ननिर्वाहकं न यथा शुक्तिरजतादित्यर्थः कूटकार्षापणेति कूटमविकारि खंडरहितं यत्कार्षापणं षोडशमाषादिपरिमितं सुवर्णमुद्रादि तेनाखंडेनापि
पादादिभागारोपेण क्रयादिव्यवहारदर्शनात् आदिपदेन स्वप्नांगनासर्पादिना सत्यस्य सुखभयादेर्भाविशुभाशुभज्ञानस्य च दर्शनं शंकाविषादिना मर
णादिकं च गृह्यते नन्वेकत्रेति हट्टपत्तनादौ बिलादौ च सत्यस्य रजतसर्पादेरन्यत्र शुक्तिरज्ज्वादावारोपो भ्रमः प्रपंचस्यानारोपितस्य ब्रह्मणोन्यत्राधिष्ठाने स
ति द्वैतापत्तिः असत्त्वे तस्य खपुष्पतुल्यत्वेन कथं ब्रह्मणि तदारोप इत्यर्थः अत्यंतासतोत्यंतासत्यधिष्ठाने चारोपो नेत्यत्र भाट्टवार्तिकमाह अध्यस्यत

नैकांतिकत्वमेवेति भावः ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किंतु अविद्यायुक्तं तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्या
त्वमित्याशंक्य तत्तुल्यमत्रापीति दूषयति न तथोभययुगिति अयमर्थः अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम् एवंभूत
स्य च न वस्तुसत्त्वम् अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपंचस्येति ननु माभूदनेन हेतुना प्रपंचस्य सत्त्वं हेत्वंतरे
ण तु साधयामः तथाहि सदिदमर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह व्यवहृतये विकल्प इषित इ

**सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक्**

ति व्यवहाराय अर्थक्रियार्थं विकल्पो भ्रम इषित इष्ट एव कूटकार्षापणादिनापि क्वचिद्व्यवहारदर्शनात् नन्वेकत्र सतोन्यत्रारो
पो भ्रमः प्रसिद्धः अत्यंतासत्त्वे कथं प्रपंचो भ्रमः स्यात् सत्त्वे वानाद्वैतसिद्धिः उक्तं च भाट्टैः अध्यस्यते खपुष्पत्वमसत्कथम
वस्तुनि प्रज्ञातगुणसत्ताकमध्यारोप्येन वा न वेति नेत्याह अंधपरंपरयेति अंधपरंपरया यो विकल्प इत्यन्वयः अयं
भावः संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्त्वम् प्रतीतौ सत्यां वस्तुसत्त्वाभावेन भ्रम
व्यतिरेकादर्शनात् अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तरं आरोपो भविष्यति

इति असत्क्वाप्यदृष्टं खपुष्पं कथमध्यस्यते अवस्तुनि अत्यंतासत्यधिष्ठाने वा कथं रजतादिकमध्यस्यते न कथमपीत्यर्थः उत्तरार्थे प्रथमं वा
पदं चार्थे प्रज्ञातोनुभूतो गुणो रूपादिः सत्ता सद्भावश्च यस्य तत् प्रज्ञातगुणसत्ताकं रजतादिकं चार्थकवापदेन प्रज्ञातो गुणश्चाकचक्यादिः सामान्य
धर्मः सत्ता पुरोवर्तित्वादिकं च यस्य तस्मिन्नधिष्ठाने चाध्यारोप्यते करणदोषविषयदोषेंद्रियसंप्रयोगादिकारणसामग्र्यभावे तु न वारोप्यते प्रज्ञात
गुणसत्ताकमेव वस्तु प्रज्ञायमानगुणसत्ताके एवाधिष्ठानेऽध्यारोप्यत इति नियमद्वयं आरोप्यत एवेति तु न नियम इत्यर्थः अन्यत्राधिष्ठानेत्यंतासतो

जगतोवाङ्मनसाद्यगोचरेब्रह्मणिकथमारोपइतिभावः वस्तुसत्वंविषयसत्यत्वंतथाचभ्रमहेतुसंस्कारसिध्यर्थंयज्ञार्थज्ञानंनापेक्ष्यते भ्रांति-
ज्ञानेनापिसंस्कारसिध्यातादृशसंस्कारमात्रेणोत्तरत्रभ्रमसिद्धेरित्यर्थः यदभावेयदभावइतिव्यतिरेकनिश्चयेनकारणत्वनिश्चयःप्रकृतेव्य
तिरेकादर्शनान्नवस्तुसत्वस्यभ्रमकारणत्वनिश्चयइत्याह प्रतीतौसत्यामिति वस्तुसत्वाभावेनविषयसत्यत्वाभावेनव्यतिरेकस्यभ्रमाभावस्याद
र्शनात् गुंजापुंजेवन्हिभ्रमाहितसंस्कारेणापिपुनस्तत्रैवगुंजापुंजादौभ्रमपरंपरादर्शनादित्यर्थः इंद्रियागोचरस्यापिब्रह्मणःस्वयंप्रकाशत्वेनस्फुरमा
णत्वादारोपाधिष्ठानत्वंयुक्तं इंद्रियागोचरेपिनभसिसाक्षिभास्येनीलंनभइत्यारोपदर्शनात् अधिष्ठानारोप्ययोरेकत्रज्ञानेस्फुरमाणमेवाध्यास
व्यापकंनत्वधिष्ठानस्येंद्रियगोचरत्वमारोप्यस्यवस्तुनःसत्यत्वंवाव्यापकंव्यभिचारादितिभावः अंधपरंपरान्यायेनेति इहवटेयक्षोदृष्टइतिकेनचि

अंधपरंपरान्यायेनव्यवहारः सेत्स्यतीत्यप्रयोजकोहेतुरिति नन्वक्षय्यंहवैचातुर्मास्ययाजिनः सुकृतंभवति अपामसोमम
मृता अभूमेत्यादिभिः कर्मफलस्यनित्यत्वप्रतिपादनादसत्वंनघटतेनहिनित्यवस्तु असद्भवति तस्माद्वेदप्रतिपादितत्वात्
द्वैतंसदेवेत्याशंक्याह भ्रमयतीति हे भगवन् तेभारतीवेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थ

व्यवहृतयेविकल्पइषितोंऽधपरंपरयाभ्रमयतिभारतीतउरुवृत्तिभिरुक्थजडान् ३६

जडान्कर्मश्रद्धाभराक्रांतमंदमतीन् भ्रमयतिमोहयति अयंभावः नहिवेदःकर्मफलंनित्यमभिप्रैति किंतुलक्षणया
प्राशस्त्यमात्रंविध्येकवाक्यत्वात् अन्यथावाक्यभेदप्रसंगात् तद्यथेहकर्मचितोलोकः क्षीयते एवमेवामुत्रपुण्य
चितोलोकः क्षीयतइतिन्यायोपबृंहितश्रुत्यंतरविरोधाच्च अतःकर्मजडानामिदंभ्रममात्रमिति एतेनैवतस्माद्वाए
तस्मादात्मनाआकाशःसंभूतः इत्यादीनामप्यन्यपरत्वंदर्शितंभवति ३६

दंधेनांधउपदिष्टस्तेनान्यस्तेनान्यइतिपरंपरायांयस्तभ्रमः पूर्वपूर्वभ्रमजन्यएवनकस्यचिद्यक्षप्रमातेनचमूर्च्छामरणाद्यर्थक्रियापिदृश्यतेतद्दित्य
र्थः अप्रयोजकोहेतुरिति अर्थक्रियाकारित्वंहेतुरस्तुसत्यत्वंसाध्यमस्त्वीत्युक्तेनुकूलतर्काभावात्साध्यनिश्चयस्यप्रयोजकः कारणंनेत्य
र्थः अक्षय्यमिति चातुर्मास्यनामकयागकर्त्तुः सुकृतंयागजनितंस्वर्गादिफलंभोगेनकालेनवाक्षेतुमशक्यमनंतप्रलयानंगीकारा
दित्यर्थः अपामेति सोमासंयागेष्वपिबामतेनचामृतानाशरहिताअनंतकालंस्वर्गभोक्तारोजाताः स्मेतिक्रमेणभोग्यभोक्तृद्वैतनित्य
त्वश्रुतिः लक्षणयेति यथाप्रजापतिरात्मनोवपामुदखिददितिवाक्येनस्ववपोत्खादनरूपस्वार्थंपरित्यज्यजहल्लक्षणयापशुयागप्राश
स्त्यमात्रंबोध्यतएवमक्षय्यादिवाक्यैः स्वार्थत्यागेनचातुर्मास्ययागप्राशस्त्यमात्रमुच्यते नतुफलनित्यत्वमिति मीमांसकैः स्वार्थबोधन

पूर्वकविध्यन्वयस्यार्थवादेष्वनंगीकारात् सर्वथास्वार्थत्यागस्यैवांगीकारात् तदुक्तं भगवता जैमिनिना विधिनात्वेकवाक्यत्वात्स्तुत्यर्थेन विधिनास्युरिति तदाह विध्येकवाक्यत्वादिति सर्वविधिवाक्यैः शीघ्रप्रवृत्तिसिद्ध्यर्थमैकरूप्येण प्राशस्त्यबोधनमेवापेक्ष्यते फलनित्यत्वादिना नार्थापेक्षणे वैरूप्यापातात् विध्यपेक्षितार्थबोधने हि विधिवाक्येनैकवाक्यत्वसिद्धिः अन्यथा विध्यपेक्षितप्राशस्त्यबोधनं विहाय विध्यनपेक्षितस्वर्गादिनित्यत्वबोधने विध्येकवाक्यत्वासंभवेन वाक्यभेदः प्रसज्जते ननु देवताधिकरणोक्तवेदांतसिद्धांते भूतार्थवादरूपाणामिंद्रो वृत्रायवज्रमुद्यच्छदित्यादिवाक्यानां स्वार्थेपि प्रामाण्यं स्वीकृतं तद्वदक्षय्यादिवाक्येष्वस्त्विति शंकायामाह तद्यथेहेति यागादिपुण्यकर्मसंपादितः स्वर्गादिः क्षयिष्णुर्भवितुमर्हति कर्मसंपादितत्वात् कृष्यादिकर्मचिनसस्यादिवदित्यनुमानगर्भितश्रुत्यंतरविरोधात् युक्तिरहिताक्षय्यश्रुतिर्गुणवादरूपैव विरोधे गुणवादोऽस्यानुवादोऽवधारिते भूतार्थवादस्तद्धानात्रिधोच्यते इत्युक्तेः गुणवादानुवादयोश्च न स्वार्थे प्रामाण्यमिति

उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पः स्रजः कुर्वन्कार्यमपीह कूटकनकं वेदोऽपि नैवं परः अद्वैतं तव सत्परं तु परमानंदं पदं तन्मुदा वंदे सुंदरमिंदिरानुत हरे मा मुंच मामानतम् २३ ७ ७

भावः ननु आत्मन आकाशः संभूत इत्यादिसृष्ट्यादिश्रुतिभिरेव नानाविधद्वैतप्रतिपादनात्कथं जगन्मिथ्येत्याशंकायामाह एतेनेति अन्यपरत्वमिति नेह नानास्ति किंचन अथात आदेशो नेति नेति अस्थूलमनणु इत्यादिनिषेधवाक्यापेक्षितनिषेध्यसमर्पकत्वं सृष्टिवाक्यानां अथवा ब्रह्मणि प्रपंचनिषेधे न्यन्नसत्त्वशंका स्यात् ब्रह्मोपादानत्वोक्त्या उपादानादन्यत्र कार्यसत्तानिषेधे सिद्धे ब्रह्मण्यपि तन्निषेधे निःशंकमद्वैतसिद्धिरिति सृष्टिश्रुतिभिः सर्वप्रपंचस्य ब्रह्मोपादानकत्वं श्राव्यत इत्यद्वैतपरत्वमेव सृष्टिश्रुतीनामित्यर्थः उद्भूतमिति सद्रूपादपि भवत उत्पन्नं विश्वं सन्नैव सत्यं नैव यथा स्रजव्यावहारिकसत्यायाः उत्पन्नः सर्पो व्यावहारिकसत्यो न किंतु मिथ्यैव कूटसुवर्णं कार्यमर्थक्रियां कुर्वदपि भवति ततोऽर्थक्रियाकारित्वेनापि हेतुना विश्वं सन्न अक्षय्यादिवाक्यरूपः सृष्ट्यादिवाक्यरूपश्च वेदोपि एवंपरः विश्वसत्यत्वपरो न तत एव सर्वो देवः क्रियापर इत्यपि नेति भावः एवमद्वैते परमार्थिकेपि सति अहं सेव्यसेवकभावादिद्वैतकल्पनया भजे त्वमपि मामा मा मुंच नायं मद्भिन्नो नापि दुःखादिसंसारभाक् स्वप्नद्रष्टेव मिथ्यैवाक्रोशकारीत्यद्वैतदृष्ट्या मां नोपेक्षस्वेत्यर्थः २२ ३६ ७ ७

मृल्लोहकार्ष्णायसेति मृत्तिकासुवर्णायोरूपाणामित्यर्थः यथासौम्येति एकेनकारणभूतेनमृत्पिंडेनविज्ञानेनसर्वंतत्कार्यंघटशरावादिविज्ञातंस्यात् कथमितिचेत्तत्राह वाचारंभणमिति नामधेयंनामैव घटादिविकारः केवलंनामैवअनृत्तद्वाचारंभणंवाचैवकेवलमारभ्यते व्यवन्हीयतेवागारभ्यनामातिरिक्तविकारः सत्योनास्त्येवमृत्तिकैवसत्यंवस्त्वस्तीत्यर्थः लोहमणिनासुवर्णपिंडेन् नखनिकृंतनादिनाकार्ष्णायसपिं

तदेवंप्रपंचस्यसत्वेसाधकंनास्तीत्युक्तम् इदानीमसत्वेसृष्टिप्रलयश्रुतयोयतोवाइमानिभूतानिजायंते इत्याद्यास्तन्मूलंचानुमानं-प्रमाणमित्याह नयदिदमितियद्यस्मात् इदंविश्वमग्रेसृष्टेःपूर्वंन आसन आसीत् सदेवसौम्येदमग्रआसीत् आत्मावाइदमेकएवाग्रआसीदित्यादिश्रुतेः नचनिधनात्प्रलयात् अनुअनंतरंभविष्यत् भविष्यति नासदासीन्नोसदासीत्तदानीमित्यादिश्रुतेः अतःकारणात् अंतरामध्येऽपिएकरसेकेवलेत्वयिमृषामिथ्यारूपमेवविभातीतिमितंनिश्चितम् यतएवमतःश्रुत्याद्रविणजातिविकल्पपथैः द्रविणजातीनांद्रव्यमात्राणांमृल्लोहकार्ष्णायसरूपाणां विकल्पाभेदाघटकुंडलादयः तेषांपंथानोमार्गाः प्रकारास्तैरुपमीयंतेसदृशतयानिरूप्यते यथातत्रकार्यकारणानांनामधेयमात्रता कारणंमृदाद्येवतुसत्यम् तथाऽत्राप्याकाशादीनांनाममात्रता

नयदिदमग्रआसनभविष्यदतोनिधनादनुमितमंतरात्वयिविभातिमृषैकरसे अतउपमीयतेद्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ३७ ६ ६

ब्रह्मैवसत्यम् तथाचश्रुतिः यथासौम्यैकेनमृत्पिंडेनसर्वंमृन्मयंविज्ञातंभवतिवाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यम् यथाएकेनलोहमणिनासर्वंलोहमयंविज्ञातंस्यात् यथाएकेननखनिकृंतनेनसर्वंकार्ष्णायसमित्यादि तस्मादस्यसत्वेप्रमाणाभावादसत्वेप्रमाणस्यविद्यमानत्वात् वितथमनोविलासमृतंसत्यमितिये अवयंतिजानंतिते अबुधाः अज्ञाइत्यर्थः अत्रैवंप्रयोगः विवादाध्यासितंनसत्आद्यंतयोरविद्यमानत्वात् विकारित्वाद्दृश्यत्वाच्चशुक्तिरजतादिवत् इत्यन्वयदृष्टांतः आत्मवच्चेति व्यतिरेकदृष्टांतः ३७ मुकुटकुंडलकंकणकिंकिणीपरिणतंकनकंपरमार्थतः महदहंकृतिखप्रमुखंतथानरहरेनपरंपरमार्थतः २४ ६

डेनविज्ञातेननहिकारभूतच्छुरिकादिविज्ञातमित्यादि विवादाध्यासितं सत्यंवामिथ्यावेति विवादविषयीभूतंविश्वंनसत्यं आद्यंतयोरविद्यमानत्वादित्यादिपृथग्हेतुत्रयं अन्वयेशुक्तिरजतादिवत्व्यतिरेके आत्मवदितिज्ञेयं मुकुटेति मुकुटादिरूपेणपरिणतंविकारभावंप्राप्तंसर्वंपरमार्थतः कनकमेवेत्यर्थः २४ ३७

सयदजया द्वासुपर्णेति द्वाद्वौजीवेश्वरौसुपर्णासुपर्णौशोभनगमनवंतौसयुजौबिंबप्रतिबिंबभावेननित्यसंयुक्तौसखायौउपकार्योपकारकभावे
नवर्तमानौ यद्वानित्यत्वेनसमानस्वभावौ समानमेकंवृक्षंवृश्च्यतेछेद्यतेइतिनाशवत्त्वेनवाप्रियाप्रियादिबहुफलत्त्वपुण्यापुण्यादिबहुबी
जत्त्वादिनावावृक्षसदृशंशरीरंपरिषस्वजातेभोक्तृत्वेननियामकत्वेनचैकंशरीरंश्रितवंतावित्यर्थः तयोर्मध्ये अन्यः एकोदेहत्रयतादा-
त्म्याभिमानीअंतःकरणप्रतिबिंबोजीवः पिप्पलंकर्मफलंसुखादिस्वादुयथातथा अत्तिभुंक्ते अन्यःनित्यमुक्तईश्वरः अनश्नन्कर्मफलम-
ननुयदिप्रपंचोनामनास्त्येवतदाऽसतातेननचैतन्यस्यसंबंधगंधोपि नर्हिकिमपराद्धंजीवेनयतोऽयंसंसरति किंवाबहुपुण्यमीश्वर-
स्ययतोनित्यमुक्तः किंविषयंचतदाकर्मकांडमित्यपेक्षायांजीवेश्वरविशेषम् द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते तयोर
न्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति अजामेकांलोहितशुक्लकृष्णामित्याद्यावदंतीत्याह सयदजयेति सतुजीवः यद्यस्मा
त् अजयामायया अजामविद्यामनुशयीत आलिंगेत् ततोगुणांश्चदेहेंद्रियादीन्जुषन्सेवमान आत्मतयाअध्यस्यन् तदनुतदनंतरं
सरूपतांतद्धर्मयोगंचजुषन् अपेतभगःपिहितानंदादिगुणःसन्मृत्युंसंसारंभजतिप्राप्नोतितद्विषयमेवचकर्मकांडमितिभावः त्वमुत-
त्वंतुजहासितामजांमायाम् ननुसामथ्येवास्तिकथंत्यागस्तत्राह अहिरिवत्वचमिति अयंभावः यथाफणंगःस्वगतमपिकंचुकंगुणबु-

सयदजयात्वजामनुशयीतगुणांश्चजुषन्भजतिसरूपतांतदनुमृत्युमपेतभगः त्वमुतजहासि
तामहिरिवत्वचमात्तभगोमहसिमहीयसेऽष्टगुणितेऽपरिमेयभगः ३८ ७ ७

त्थ्यानाभिमन्यतेतथात्वमजाम्नहिनिरंतराल्हादिसंवित्कामधेनुवृंदपतेरजयाकृत्यमितितामुपेक्षसइतिकुतएतत्तदाह आत्तभगः
नित्यप्राप्तैश्वर्यः महसिपरमैश्वर्ये अष्टगुणिते अणिमाद्यष्टविभूतिमतिमहीयसेविराजसेकथंभूतः अपरिमेयभगः अपरिमितै
श्वर्यः नह्यन्येषामिवदेशकालादिपरिच्छिन्नंतवाष्टगुणितमैश्वर्यं अपितुपरिपूर्णस्वरूपानुबंधित्वादपरिमितमित्यर्थः ३८ नृत्यं
तीतववीक्षणांगणगताकालस्वभावादिभिर्भावान्सत्वरजस्तमोगुणमयानुन्मीलयंतीबहून् मामाक्रम्यपदाशिरस्यतिभरंसं
मर्द्दयंत्यातुरंमायातेशरणंगतोऽस्मिनृहरेत्वामेवतांवारय २५ ७ ७ ( भुंजानोपिअभिचाकशीतिस्वप्रकाश
चिद्रूपेणविराजतइत्यर्थः निरंतरेति निरंतरसततमाल्हादिन्यः आनंदिन्यःसंविदःस्वानंदस्फुरणानिताएवकामधेनुवृंदानितेषांपत्युःपालक
स्यनित्यसंविदएकत्वेपिकालभेदेनबहुत्वव्यपदेशः वृंदानांपालनंचनित्यस्फूर्त्यास्वस्मिन्संरक्षणं अजयामाययाश्लेषेणछाग्यानहिकृत्यमिति
परिपूर्णस्वरूपानुबंधित्वादिति भगवतःसर्वप्रकारकैश्वर्यस्यगुणानांचचतुर्भुजादिविग्रहस्यचचिद्रूपत्वान्मायाकार्यत्वाभावेननित्यस्वरूपभू
तत्वादित्यर्थः २५ ३८

कामानिति कामान् विषयान् यः कामयते प्रार्थयते मन्यमानः दोषाननादृत्य विषयगुणानेव चिंतयन् सः तैः कर्मभिः कामैः धर्माधर्मप्रवृत्तिहे
तुविषयेच्छारूपैः सह तत्र तत्र योनिषु विषयप्राप्तिनिमित्तं जायते कामाः कर्मसु प्रेरयंतीति तत्कर्मवशाच्च तैरेव कामैर्वेष्टितस्तत्र तत्र जायत इ



एवं तावदुक्तसाधनकदंबेन ये भगवंतं भजंति ते मृत्युं तरंति इतरे संसरंतीत्युक्तम् इदानीं ये बहिः संगं परित्यज्य भगवन्मार्गे प्रवृ
त्ता अपि कथंचिदंतर्वांताशिनः कामान्न मुंचंति ते न भगवंतं प्राप्नुवंति न चेह सुखं लभंते केवलं कुयोनीरेव प्राप्नुवंतीति तान् शोच
न् कामान् यः कामयते मन्यमानः स कर्मभिर्जायते तत्र तत्रेत्यादिश्रुत्यर्थमाह यदि नसमुद्धरंतीति हे भगवन् ये यतयो हृदि-
स्थिताः कामजटाः कामस्य मूलानि वासनाः यदि न समुद्धरंति नोत्पाटयंति तेषामसतां भवान् हृदिगतोपि दुरधिगमः दुष्प्रापः कथम्
अस्मृतकंठमणिः विस्मृतो यः कंठमणिः तत्तुल्यः स यथा कंठे वर्तमानोप्यस्मृतश्चेदप्राप्त इव भवति तद्वदिति न केवलमेतावत् किंतु अ

यदि न समुद्धरंति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदिगतोऽस्मृतकंठमणिः असुतृपयोगिना
मुभयतोऽप्यसुखं भगवन् ननपगतांतकादनधिरूढपदाद्भवतः ३९ ७ ७

सुतृपयोगिनामिंद्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव तदाह अनपगतांतकात् अनिवृत्तात्
मृत्योः लोकाराधनधनार्जनादिक्लेशात् भोगवैभवप्राकट्यभयाच्चेह तावद्दुःखं भवत ईश्वरादपि दुःखं कथंभूतात् अनधिरूढप
दात् अनधिरूढं पदं स्वरूपं यस्य तस्मात् त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबंधनत्वदंडरूप
नरकप्राप्तेरमुत्राप्यसुखमित्यर्थः ३९ दंभंन्यासमिषेणवंचितजनं भोगैकचिंतातुरं संमुह्यंतमहर्निशं विरचितोद्योगक्लमैराकुलम्
आज्ञालंघिनमज्ञमज्ञजननासंमाननासन्मदं दीनानाथ दयानिधान परमानंद प्रभो पाहि माम् ३९ ७

त्यर्थः अनिवृत्तान्मृत्योरित्युपलक्षणमैहिकदुःखानामित्यभिप्रायेणाह लोकाराधनेत्यादि २६ ३९ ७

त्वदगमी एषइति ब्राह्मणस्यब्रह्मविदः महिमामाहात्म्यं नित्यएकरूपः यतः पुण्यकर्मणानवर्धते पापकर्मणाचकनीयान्-

ननुयतेर्नकिमपिकृत्यमस्तिप्रारब्धमेवसुखोपभोगेनापक्षप्यते अतःकिमितिवृथाशप्यतेऽभयतोऽप्यसुखमितिश्रूयते
चएषनित्योमहिमाब्राह्मणस्यनकर्मणावर्धतेनोकनीयानित्यादितत्राह त्वदवगमीति हेसगुणषडैश्वर्ययुक्तत्वदवगमीत्व
ज्ज्ञानवान् भवदुत्थशुभाशुभयोः भवतःकर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोः शुभाशुभयोःप्राचीनपुण्यापुण्य
कर्मणोःफलभूतान् गुणविगुणान्वयान् सुखदुःखसंबंधान् नवेत्तिनानुसंधत्तेतर्हितदानींचदेहभृतांदेहाभिमानिनांप्रवृत्तिनिवृ
त्तिकरीर्गिरः विधिनिषेधलक्षणान्वेत्तिविगतदेहाभिमानतयाकार्याकार्यबोधाभावान्ननियुज्यत इत्यर्थः युक्तंचैतत् यतः

त्वदवगमीनवेत्तिभवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हिदेहभृतांचगिरः अनुयुग
मन्वहंसगुणगीतपरंपरयाश्रवणभृतोयतस्त्वमपवर्गगतिर्मनुजैः ४० छ

कारणान्मनुजैरन्वहंश्रवणभृतः अनुदिनंश्रवणेनचेतसिधृतस्त्वंतेषामपवर्गगतिः अपवर्गरूपागतिर्भवसिकथंश्रवणभृ
तः अनुयुगंप्रतियुगंयागीतपरंपराउपदेशसंततिः तयासत्संप्रदायानुसारेणेत्यर्थः एतदुक्तंभवति येनावक्तत्वज्ञानिनःन
तेषांकर्माधिकारशंकाऽपियेचानवरतंत्वत्कथाश्रवणादिनिष्ठाः तेषामप्यासन्नभवत्पदानांनविधिनिषेधबाधः इतरेषांतु
योगच्छन्नेंद्रियलालसानासुभयतोप्यसुखमिति ४० अवगमंतवमेदिशमाधवस्फुरतियन्नसुखासुखसंगमः
श्रवणवर्णनभावमथापिवानहिभवामियथाविधिकिंकरः २७ छ छ छ

क्षीणोनभवतीति २७ ४० छ छ छ छ छ छ

द्युपतयएवेति सहोवाचयदूर्ध्वमिति सयाज्ञवल्क्यउवाच हेगार्गियत्ब्रह्मदिवःब्रह्मांडकटाहादूर्ध्वमुपरि यच्चपृथिव्याअधस्तनांडकटाहादर्वाक्अधः यच्चद्यावापृथिवीइमे अनयोर्द्यावापृथिव्योरंतरामध्येभूतमतीतंभवत्वर्तमानंभविष्यत्वर्तमानादूर्ध्वकालभावियत्तत्सर्वंयदधीनमाचक्षतइतियस्यांतरामध्येद्यावापृथिव्योर्भूतवर्तमानादिसर्वंजगच्चेतिवा ब्रह्मन्ब्रह्मण्यनिर्देश्येइत्यत्रपूर्वपक्षोक्तंपदार्थस्यैववाक्यार्थत्वमितिनियमंशंकते कथंतर्हीति पदस्यलक्षणयावृत्त्याशक्त्यावायोर्थःसवाक्येनबोधयितुंशक्यते यःकयापिवृत्त्यापदेननबो-

त्वदवगमीनवेत्तिस्करवदुःखेनचविधिनिषेधावित्युक्तं तत्रननुकथमवगंतुंशक्यते दुरधिगमत्वस्योक्तत्वात् इत्येवमाशंक्यसत्यमेवमनवगाह्यमहिम्नोवाङ्मनसागोचरत्वादविषयत्वेनैवज्ञानमितिदर्शयन् यदूर्ध्वंगार्गिदिवोयदर्वाक् पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंभवच्चभविष्यच्चेत्यादिश्रुतिप्रतिपादितमपरिमितमहिमानमाह द्युपतयएवेति हे भगवन् तेअंतंद्युपतयःस्वर्गादिलोकपतयोब्रह्मादयोनययुःनप्रापुः तत्कुतः यदंतवद्वस्तुतत्किमपित्वंनभवसि आस्तांद्युपतयोनययुरितियद्यस्मात्त्वमपिआत्मनोंतं

## द्युपतयएवतेनययुरंतमनंततयात्वमपियदंतरांडनिचयाननुसावरणाः

नयासिकुतस्तर्हिसर्वज्ञतासर्वशक्तितावाअतआह अनंततयाअनंताभावेन नहिशशविषाणाज्ञानंसार्वज्ञंनदप्राप्तिर्वाशक्तिवैभवंनिहंति अनंतत्वमेवाह यदंतरेति यस्यतवअंतरामध्येननुअहोसावरणाः उत्तरोत्तरंदशगुणसप्तावरणयुक्ताः अंडनिचया-ब्रह्मांडसमूहाः वांतिपरिभ्रमंति वयसाकालचक्रेणरवेरजांसीवसह एकदैवनतुपर्यायेणहियस्मादेवमतः श्रुतयस्त्वयिफलंतितात्पर्यवृत्त्यापर्यवस्यंति नतुसाक्षाद्वदंति अयमेतावानितिसगुणस्यगुणानंत्यात् निर्गुणस्यचागोचरत्वात् कथंतर्हिपदार्थेतात्पर्यमिति

ध्यःसकथंवाक्येनबोधनीयइत्यर्थः वस्तुस्वरूपबोधकानिद्विविधानिवाक्यानि विधिमुखानिनिषेधमुखानिच तत्ररात्रौबहुतरप्रकाशवान्शीतद्युतिमंडलश्चंद्रइतिचंद्रस्वरूपबोधनेविधिमुखंवाक्यं गगनगज्योतिःपूष्णाकरोननक्षत्राणितडितश्चनइतिनिषेधमुखं तत्रविधिमुखवाक्येपूर्वपक्षोक्तनियममंगीकरोति

तत्रविधीति निषेधमुखवाक्येनियमभंगमाह निषेधेति उष्णाकरनभादिपदेश्चंद्रोनोच्यतेतिनिषेधवाक्यस्य पदार्थोनभवतितथापिनिषेधवा
क्यसमुदायेनलक्षणयाबोध्यतइतित्वदुक्तनियमस्यभंगइत्यर्थः अन्यदेवेतिविदितानुज्ञानविषयादन्यतूभिन्नं अथोअपिअविदितादज्ञान
विषयादपि अधिअन्यदित्यर्थः अन्यत्रेति धर्माधर्मास्पृष्टंकृताकृतात्कार्यकारणात्भिन्नंयदित्यर्थः अन्यत्रभूताच्चभव्याच्चयत्पश्यसितत्
वदेति श्रुतिशेषः नन्वत्रान्यादिपदमेवतद्वाचकमस्तुतत्राह अस्थूलमित्यादि आदिनाअह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोवागनाकाशमसं
गमरसमगंधमचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुखममात्रमनंतरमबाह्यमित्यादि अथातआदेशोनेतिनेतीत्यादीनिगृह्यंते एवंनि

तत्रविधिमुखवाक्येभवेदयंनियमः पदार्थस्यैववाक्यार्थत्वमितिनिषेधमुखेतुनायंनियमइत्याह अतन्निरसनेनेति अन्यदे
वतद्विदितादथोअविदितादपि अन्यत्रधर्मादन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात् अस्थूलमनण्वित्यादिप्रकारेणलक्षणयाचतत्
त्वमसीत्यादयः पर्यवस्यंति नचवाच्यं निषेधैःशून्यमेवज्ञाप्यतइति यतोभवन्निधनाः भवतित्वयिनिधनंसमाप्तिर्यासांतास्तथा

खइवरजांसिवांतिवयसासहयच्छ्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाः ४१

नहिनिरवधिर्निषेधःसंभवति अतोवधिभूतेत्वयिफलंतीत्यर्थः ४१ द्युपतयोविदुरंतमनंततेनचभवान्नगिरःश्रुतिमौलयः त्व
यिफलंतियतोनमइत्यतोजयजयेतिभजेतवतत्पदम् २८ ॥ ॥ इतिवेदस्तुतेःश्रीधरीटीकासमाप्ता ॥

यमभंगाद्विधिमुखेष्वपि अखंडवाक्यलक्षणयापदार्थत्वाभावेपिवाक्यबोध्यत्वंसंभवतीत्याशयेनाह लक्षणयाचतत्वमसीति लक्षणयेतिनि
षेधमुखेष्वपिद्रष्टव्यं एतद्बुद्धींद्रियेनिश्लोकेउपपादितमित्यलं अंतर्यामीसर्ववित्दीननाथःश्रीमत्स्वामीविठ्ठलोदेवदेवः तेनैवाहंप्रेरितस्तत्रतत्र
तंतंभावंव्यक्तमाकार्षमित्थं १ नमीमांसाप्रवीणोहंनकाणादोक्तिपारगः पौर्वापर्यंवार्तिकेषुश्रुतिभाष्याणिसर्वशः २ सम्यगेताननालोच्य
कुर्वेव्याख्यांस्फुबोधिनीं श्रुतिस्तुतेःश्रीधरीयकृतौतत्क्षम्यतांबुधैः ३ इतिश्रीमदनंतोपाध्यायसूनुरिमांकृतिं कृत्वार्पयत्कृष्णपदेका
शीनाथाभिधोद्विजः ४ इतिश्रीमदनंतोपाध्यायसूनुकाशीनाथोपाध्यायविरचितावेदस्तुतिश्रीधरीयटीकाव्याख्यासमाप्ता ॥

श्रीगणेशायनमः श्रीरघुवीरोजयति ननुव्यवायादीनांइति ज्योतिष्टोमादौपश्वंगानांहोमेहुतशेषंमांसंसौत्रामण्यांसुराग्रहैर्मद्य
होमेहुतशेषंमद्यंइष्टौचपुरोडाशंचभक्षयेत् विवाहविधिपरिगृहीतांपत्नींषोडशदिनेष्वनिषिद्धदिनेगच्छेत् इत्यादिविधिप्राप्ताः स्त्रीसंगादयो
विरागिणाप्यवश्यानुष्ठेयत्वान्निंदार्हानेत्यर्थः विधिर्नास्तीति अपूर्वविधिर्नास्तीत्यर्थः तथाहि विधिरत्यंतमप्राप्तौनियमः पाक्षिके सति
उभयोर्नित्यतः प्राप्ते परिसंख्येतिगीयते तत्रापूर्वविधिर्यथा व्रीहीन्प्रोक्षति अहरहः संध्यामुपासीतेति अत्रहिप्रोक्षणसंध्यावंदना
दीनामेतद्वाक्यंविनालोकतोऽनुमानादिनाप्राप्त्यभावादयमपूर्वविधिः पक्षप्राप्तौअप्राप्तांशपूरणफलकोनियमविधिर्यथा व्रीहीनवहंति
स्वाध्यायोध्येतव्यइति अत्रपुरोडाशादिविधिभिः तंदुलनिष्पत्तावाक्षिप्तायांलोके तंदुलनिष्पत्तिसाधनत्वेन दृष्टानि घरट्ट विदलनावघा
तादीनि विकल्पेनप्राप्तानिइतिनावघातप्राप्त्यर्थोऽपूर्वविधिरयंकिंतुविदलनादेः साधनांतरस्यपक्षेप्राप्तावघातस्यपाक्षिकत्वप्राप्तौपाक्षि

ननुव्यवायादीनां ऋतौभार्यामुपेयात्हुतशेषंभक्षयेदित्यादिना विहितत्वात्किमेवं निंद्यते अत आहलोकइति

लोकेव्यवायामिषमद्यसेवानित्यास्तुजंतोर्नहितत्रचोदना

व्यवायः स्त्रीसंगः नित्याः रागत एवनित्यप्राप्ताः जंतोः प्राणिमात्रस्य अतः तत्रतासुचोदनाविधिर्नास्ति ७

कप्राप्त्यांशपूरणार्थोनियमविधिः अवहन्यादेवेतिनियमेनसर्वथाऽवघाते प्रापिते अप्राप्त्यांशभावादप्राप्त्यांशपूरणरूपनियमफलसि
द्धिः एवंक्रतुविधिभिः स्वानुष्ठानार्थंइतिकर्तव्यतादिज्ञाने आक्षिप्तेज्ञानसाधनत्वेनवेदाध्ययनपौरुषप्रयोगादिग्रंथाध्ययनंचपक्षेप्राप्तंत
त्रवेदाध्ययनेनैवक्रत्वनुष्ठानज्ञानंसंपाद्यंइतिनियम्यते नचात्रोभयोः समुच्चयेन प्राप्तिरस्तुततश्चपक्षप्राप्तिरितिशंक्यं एकेनफलसिद्धौ
साधनांतरप्राप्त्यसंभवात् उभयोर्नित्यप्राप्तौ अन्यनिवृत्तिफलकः परिसंख्याविधिर्यथा गृहमेधीयेइष्टिप्रकरणे आज्यभागौयजतीति
अत्रहिआज्यभागयोर्नात्यंतमप्राप्तिः प्रकृतिवद्विकृतिः कर्तव्येति अतिदेशिकन्यायेनप्राप्तेः अतोनापूर्वविधिः नापिनियमः अ
तिदेशेननित्यप्राप्त्यापक्षप्राप्त्यभावात् किंतुआज्यभागयोरिवप्रयाजाद्यंगजातस्यापिनित्यप्राप्त्याप्रयाजादिनिवृत्तिफलकआज्य-
भागावेवकर्तव्यौइत्येवंरूपः परिसंख्याविधिरिति ननुनियमपरिसंख्याविध्योः पक्षप्राप्तिनित्यप्राप्तिभ्यांभेदेपिफलतोभेदोनदृश्यते

अवघातनियमेननखविदलनादिनिवृत्तेराज्यभागविधिना प्रयाजादिनिवृत्तेश्चदृष्टत्वेनान्यनिवृत्तेः फलस्यसमानत्वादितिचेन्मैवं नियम
विधौअप्राप्तांशपूरणमेवप्राथमिकंफलं अप्राप्तांशपूरणंविनाऽन्यनिवृत्त्यसंभवात् तदनंतरं अर्थाज्जायमानान्यनिवृत्तिस्तुनफलंएक
फललाभेन्यफलकांक्षाभावात् परिसंख्याविधौतु अप्राप्तांशाभावाद प्राप्तांशपूरणरूपफलासंभवादन्यनिवृत्तिरेवफलमिति तस्मात्
स्त्रीसंगादीनांरागतः प्राप्तत्वात्तेष्वपूर्वविधिर्नास्तीतिसिद्धं उक्ताशयमजानानोसर्वविध्यभावोक्तिंमत्वाशंकते ननुऋतावित्यादि स्वा
शयमाह सत्यमिति किंतुनियमविधिरूपेणेति नियमविधिः रूपमाकारोयस्यसः तेननियमविधिद्वारकपरिसंख्याविधिर्नेत्यर्थः

ननुऋतावुपेयादित्यादिविधिर्दर्शितः सत्यं नत्वयमपूर्वविधिः रागतः प्राप्तत्वात् किंतुनियमविधिरूपेण
रागिणामभ्यनुज्ञामात्रंक्रियतेतदाहव्यवस्थितिरिति तेषुव्यवायादिषुकैः विवाहयज्ञसुराग्रहैः विवाहविषयएव
व्यवायःकार्यः यज्ञेएवामिषसेवासौत्रमण्यांसुराग्रहान् गृण्हातीतिश्रुतेस्तत्रैवमद्यसेवेतिक्रियते ननुचनियम
पक्षेप्यावश्यकत्वान्ननिंदायुक्ता अतआह आस्तुनिवृत्तिरिष्टेति

तेषुव्यवायादिष्विति सचतच्चसाचतानितेष्विति नपुंसकमनपुंसकेनेतिनपुंसकस्यैकशेषः विवाहविषयएवेति उपलक्षणमेतत् ऋतावेवेत्य
स्य ऋतौभार्यामुपेयादित्यत्रयदुपेयात्तद्भार्यामेव ऋतावेवेतिद्विविधनियमेतात्पर्यात् उपेयादेवेतितृतीयनियमस्तुन उपगमनस्यैवरागतो
नित्यप्राप्तत्वेनव्यावर्त्याभावात् निवृत्तिरिष्टेतिवक्ष्यमाणत्वात् ननुचनियमपक्षेपीति अपिशब्दात्परिसंख्यापक्षेपीति उक्तोदाहरणेषुव्रीह्य
वघातवेदाध्ययनाज्यभागादेरवश्यमनुष्ठेयत्वं अवघाताद्यकरणेक्रतुवैगुण्यापत्त्याप्रायश्चित्तापत्तेः एवंस्त्रीसंगाद्यकरणेप्रायश्चित्तापत्ते-
र्हेयत्वबोधिकानिंदानयुक्तेत्यर्थः आस्तुनिवृत्तिरिष्टेति प्रतीकग्रंथाग्रेटीकापाठः प्राचीनसंमतएवमास्तु व्यवायामिषमद्यसेवास्तु निवृत्तिरिष्टा

अयंभावः नायंनियमविधिरपि नित्यप्राप्तत्वात् अतोनिवृत्तिः परिसंख्यैवकथंतर्हिव्यवस्थितिरित्युक्तं उच्यतेइत्यादिः पाठांतरंलेखकप्रमादः ननु
विधिविषयेष्ववश्यानुष्ठेयत्वदर्शनात्प्रवृत्तिरेवोचितातत्कथंसिद्धांतीष्टापिनिवृत्तिः संभवतीत्याशंकायामाह अयंभावः इति कथंतर्हीति परिसं
ख्याविध्यंगीकारे व्यवस्थिति पदोक्त नियमविधित्यागाप्त्याव्यवस्थितिपदेननियमविध्यंगीकार वैयर्थ्यमित्यर्थः उपलक्षणमेतत् परिसंख्याविध्यं
गीकारेपिपरिसंख्याविधिविषयेष्वाज्यभागाश्वरशनादानादिषुअवश्यानुष्ठेयत्वदर्शनात्सिद्धांतीष्टायाः निवृत्तेरसंभवेनपूर्वपक्षोक्तदोषत्वादव
स्थ्यस्याप्युपलक्षणीयत्वात् दोषद्वयस्यापिपरिहारंप्रतिजानीते उच्यतेइति स्वतंत्रःपरिसंख्याविधिः क्वापिनांगीक्रियतेकिंतुक्वचिदपूर्वविधि

अयंभावः नायंनियमविधिरपिनित्यप्राप्तत्वात् अतोनिवृत्तिःपरिसंख्यैव आसुव्यवायामिषमद्यसेवास्तुनिवृत्ति
रिष्टाकथंतर्हिव्यवस्थितिरित्युक्तं उच्यतेनतावत्परिसंख्याविधिनाश्रुत्यानिवृत्तिरित्युच्यते तथासति स्वार्थत्याग
प्राप्तबाधपरार्थकल्पनाचेतिदोषत्रयंस्यात् अतःक्वचित्प्राप्स्यतोप्यर्थस्यप्रापणमनर्थकमित्यपूर्वविधिद्वारान्यनिवृ-

## व्यवस्थितिस्तेषुविवाहयज्ञसुराग्रहैरास्तुनिवृत्तिरिष्टा

त्तिःफलतोभवति इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्ररशनालिंगतोगर्दभाश्वाभिधानीरश
नाद्वाराप्राप्यतोमंत्रस्यापूर्वविधिद्वारापरिसंख्योच्यते

द्वारकः क्वचिन्नियमविधिद्वारकइति प्रकृतेतुनियमविधिद्वारकःपरिसंख्याविधिरिति विधिद्वयोक्तेरप्यविरोधेनस्वीकृतपरित्यागादुक्तदोषासं
भवः अपूर्वविधिद्वारकपरिसंख्याविधावेवविधेयस्यावश्यानुष्ठेयत्वंनियमविधिद्वारकपरिसंख्यायांतुविधेयस्यावश्यानुष्ठेयत्वाभावात् अथ
वापक्षप्रापकस्यनित्यप्रापकस्यचप्रमाणस्यशाश्वतत्वे विधेयस्यावश्यानुष्ठेयत्वं तस्यानित्यत्वेतुनविधेयस्यावश्यानुष्ठेयत्वमितिसिद्धांतीष्टा
पिनिवृत्तिरपिसंभवतीतिदोषद्वयसमाधिरुच्यतेइत्यर्थः प्रतिज्ञातमर्थंसहेतुकंसोदाहरणंसप्रमाणंउपपादयितुमुपक्रमते नतावदित्यादिना परि
संख्याविधिनेतिकर्तरितृतीया श्रुत्येतिकरणेसर्वत्रपरिसंख्याविधिनाश्रुत्याशब्देननान्यनिवृत्तिर्नोच्यते अन्यनिवृत्तिः शब्दार्थोनभवति किंतु
अर्थादेवसज्यते तथासतिशब्दतएवान्यनिवृत्तिप्रतिपादनांगीकारेसतीत्यर्थः स्वार्थत्यागइति इत्यश्वाभिधानीमादत्ते इतिपरिसंख्याविधिवा

